# अथेश्वरजगत्संशयवादप्रतिवाद-श्चतुर्थः खण्ड आरभ्यते

## १—अनन्त जीवाधारतयेश्वरसिद्धिः ।

जीवा अहं-प्रत्ययमात्ररूपा स प्रत्ययः सर्वजगत्स्वरूपः ।
पश्यामि यज्जगदात्मभेदात् तद् द्रष्टृ वा दर्शनमेव वाऽहम् ॥ ११५ ॥
यथाहमेकोऽस्म्यवबोधरूपः पश्यामि लोकानखिलान् यथाहम् ।
ध्रुवं तथैतेऽप्यवबोधरूपा मां चेतरांश्चानुभवन्ति मन्ये ॥ ११६ ॥
पश्यामि यद्यन्मयि तत् समस्तं मत्तः परं नेति न तत् परस्मिन् ।
जीवास्तथा ह्यन्यमनन्तजीवा यस्मिन्प्रतिष्ठाः परः ईश्वरः सः ॥ ११७ ॥
नश्यन्ति जीवा प्रभवन्ति जीवा यत्रापि यन्ति प्रभवन्ति यस्मात् ।
तद्धाम किञ्चिद् ध्रुवमस्ति जीवास्तदाश्रया सन्ति स हीश्वरोऽस्ति ॥ ११८ ॥

## २—बहिर्जगदाधारतयेश्वरसिद्धिः ।

बहिर्निराधारमिदं जगद्वा साधारकं वेत्ति विचारणीयम् ।
वीक्षे निराधारमिदं न किञ्चिन्मज्ज्ञानसाधारकमेव सर्वम् ॥ ११९ ॥
जगत्त्वसाधर्म्यवशाद्बहिर्यदप्याधारमात्रस्य समस्य मन्ये ।
अन्तर्जगद्वत् ध्रुवमस्य न स्याज्ज्ञानादृते काप्यपरा प्रतिष्ठा ॥ १२० ॥
अन्तर्जगज्ज्ञानत एव भूत्वा तत्र प्रतिष्ठाय विलीयते तस्मिन् ।
बाह्यस्य चैवं प्रभवः प्रतिष्ठा गतिर्भवेज्ज्ञान विशेष एव ॥ १२१ ॥
ज्ञानं निराधारमिदं यथा स्वे महिम्नि तिष्ठत्यपरस्य नास्ति ।
तथा जगद्बाह्यमिदं स्थितं स्वे महिम्नि न स्वीक्रियते पुनो वा ॥ १२२ ॥
ज्ञानं यथाऽस्माकमुदेत्यकस्मात् स्थित्वा क्वचित् भज्यतेऽप्यकस्मात् ।
बहिर्जगद्य प्रभवं प्रतिष्ठा परायणं तद्वदिदं न दृष्यात् ॥ १२३ ॥
अथोच्यते संभवतीदृशेदं किन्त्वेतदन्तर्जगदस्ति सर्वम् ।
मज्ज्ञानगं तस्य बहिर्न सत्ता ज्ञानं विना नास्ति जगत् स्वतन्त्रम् ॥ १२४ ॥
ज्ञानं निराधारमिदं यथा मे तथा निराधारमिदं बहिः स्यात् ।
इत्थं जगत् कल्पयितुं न शक्यं वैधर्म्यतो ज्ञानतदर्थयोस्तयो ॥ १२५ ॥
ज्ञानं निराधारमिदं समीक्षे तस्मिन् स्वनाधारकमेव चार्थम् ।
बहिर्जगद्यार्थमथं ततस्तज्ज्ञाने स्वनाधारमिव ध्रुवं स्यात् ॥ १२६ ॥
यथा त्विमे जीवजगत्पदार्था जीवा महत्सा प्रतिभान्ति तद्वत् ।
ध्रुवं समस्तेश्वरमात्महत्सा अमी पदार्था स्वयमेव भान्तु ॥ १२७ ॥
रामानुजः स्वप्नमर्थं तु सृष्टिं यतो हि मायाप्रभवामनैषीत् ।
भ्रान्तं तदेवा विद जीवमायान्त्स्वैव सपर्म यथार्थनिष्ठा ॥ १२८ ॥

देहस्य यान्त्रस्य निमित्तपोर्येन व्यवस्थास्ति न चास्ति यात्र ।
तामैश्वरीं सृष्टिमिह प्रतीमो जैत्र्यां वहिर्मां गदाद् व्यवस्था ॥ १२९ ॥
यत्रात्मतत्त्वास्त इमे पदार्थां नहि स्थिता सन्ति यदात्मनिष्ठाः ।
सर्वान्समूलं परमात्मसंज्ञं विश्वस्य विद्म परमेश्वरं तम् ॥ १३० ॥
सजीवनिर्ज्ञाननिभिन्नमूलो जगत्प्रवाहोऽयमनाद्यनन्त ।
यज्ज्ञानमूलस्तदिदं समस्तज्ञानाकरज्ञानमिहेश्वरोऽस्ति ॥ १३१ ॥
बहिर्जगद्योनिरयं तदित्थ सर्वेश्वरो नाभ्युपगम्यते चेत् ।
मज्ज्ञानमात्रेण यथेन्द्रसृष्टा सर्वत्र सर्वार्थविधा भवेयु ॥ १३२ ॥
तस्मात् स्वतन्त्रं पृथगस्त्यनन्तं विज्ञानमेकं तदधीनमेतत् ।
स्वतन्त्रमाद्यन्तविहीनमेकं प्रवर्तते विश्वमिदं बहिर्यां ॥ १३३ ॥
सत्तोपलब्धव्यतिरेकहेतोरनेन विज्ञानमिदं जगत् स्यात् ।
तदेव मन्ये भगवाननन्त स विश्वमूर्तिर्जगदीश्वरः स्यात् ॥ १३४ ॥
अशेषशक्त्यर्थघन प्रशान्त, सत्ताचनश्चिद् घन एव तस्मात् ।
एकोऽविनाशी प्रतिपद्यतेऽर्थो विश्वाश्रयो विश्वमय स आत्मा ॥ १३५ ॥
विश्वस्य सोऽयं प्रभव प्रतिष्ठा परायणं तन्मयमेतदस्ति ।
जगत्त्वयं, तत, जगज्जगत्तत्, जगत तस्मात् पृथगस्ति किञ्चित् ॥ १३६ ॥

## ३—ईश्वरीयपरिचयः ।

स ईश्वरो न प्रतिपद्यते चेत् तैलादुदारोहणमत्र चोष्मा ।
प्रदाह शक्ति श्रुचिरूपमेतान्याय यत्तस्मादचिरेण कस्मात् ॥ १३७ ॥
पश्यामि यावत् खमिदं भवनाक्रान्तं ततोऽप्यूर्ध्वमत समन्तात् ।
लोका अनन्ता अपि सन्ति होत्थ सामान्यतो ज्ञानमिहेश्वरं स्यात् ॥ १३८ ॥
ग्रहा क्रमन्ते न चलन्ति तारा स्थाने शरीराण्यथवा भवन्ति ।
तेजांसि यान्त्यूर्ध्वमत पयांसि यत्तेषु सत्यं ध्रुवमीश्वर स ॥ १३९ ॥
जागर्ति जीवो मुहुरीहतेऽसौ प्राणा भ्रमन्ते मनसा नियुक्ता ।
तस्मिन् सुषुप्ते तु यतो नियोगाच्चेष्टा स्युरेषा स इहेश्वर स्यात् ॥ १४० ॥
सर्वेऽपि जीवास्तृषिता पयोऽनु स्वत प्रधावन्ति तृषान्निहत्यै ।
पयस्तृषां नाशयतीति सत्र जानन्ति तज्ज्ञानमिहेश्वरं स्यात् ॥ १४१ ॥
यत्रेत्र गङ्गां च हिमालयं च प्राज्ञोऽनिर्देशतत्र तु वेद्मि चाहम् ।
परे च तत्रैव वदन्ति तस्मात् तदीश्वरज्ञाननिरन्तरं स्यात् ॥ १४२ ॥
यदैन्द्रियं ज्ञानमिहास्ति नस्तद् व्यक्तं त्वन्तरज्ञानविभिन्नरूपम् ।
भिन्नार्थमप्यर्थमभिन्नतद् यद् धत्त विभुमानहत तदस्वपम् ॥ १४३ ॥
चिता चिदाभास उपेत्यभेद परेश्वरज्ञानमयाश्च तेऽर्था ।
ज्ञानादभिन्ना प्रतिभान्ति तस्मादर्थां पृथक्त्व न मिथोऽस्ति गृहाण् ॥ १४४ ॥
घटं प्रपश्यामि घटेऽत्र रूपं रूपाश्रया येऽपि निरूढधर्मा ।
अस्तित्वमित्येन यतं वदामि तदैश्वरं ज्ञानमिति प्रपद्ये ॥ १४५ ॥

तत्रास्ति बुद्धिर्हि घटोपलब्धेर्न भिद्यते रूपमिमे च धर्माः ।
मन्मात्रग्राह्या अपि सन्ति नित्या मनेन्द्रियं यद् ग्रहणं करोति ॥ १४६ ॥
तत्रैव रूपाण्यपि तांश्च धर्मांस्तेषाममीषामपि चोपलब्धीः ।
एकं महाज्ञानमहं वदामि स ईश्वरः शाश्वतिकोऽद्वितीयः ॥ १४७ ॥

## ४–प्रश्नोद्धारसूत्रम् ।

प्रश्नांस्तु यान् सृष्टिविधायकुर्वंस्तत्संभवः स्याद् यदि विश्वकर्ता ।
मनुष्यवद् विग्रहवान् मितः स्याद् यथाल्पशक्तिः प्रयतेत सृष्ट्यै ॥ १४८ ॥
विज्ञानमेवेश्वर इष्यते विभुर्नासौ जडो जाड्यहरस्वभावतः ।
यथा प्रकाशस्तपनः प्रकाशवानप्यस्त्यभेदादिव धर्मधर्मिणोः ॥ १४९ ॥
आनन्दविज्ञानतदस्तितास्त्र्येते त्रयोर्थाः सहिताः स आत्मा ।
अत्यर्थवैशिष्ट्यमनुष्य तस्मात् संभाव्यते सच्चिदयं प्रसन्नः ॥ १५० ॥
जडोऽस्तु वा, नाऽस्ति तथापि हानिः, स एक आत्मास्ति, यदस्ति किञ्चित् ।
स चेतनः सोऽस्ति जडः स शुक्लः कृष्णो महानप्यणुरेव एव ॥ १५१ ॥
अस्तीह सृष्टिर्न तु वास्ति सृष्टिर्यदेतदेवं जगदस्ति किञ्चित् ।
स एष आत्मा स विवर्तमानोऽप्यनश्वरस्तेन स ईश्वरोऽस्ति ॥ १५२ ॥
अनाप्तकामस्य तदर्थमिच्छा प्रजायते नायमनाप्तकामः ।
इच्छानिवृत्तिश्च तदर्थसिद्धौ सिद्धार्थ आत्मा तु किमर्थमिच्छेत् ॥ १५३ ॥
यस्त्वल्पशक्तिः स हि शक्त्यभावादनाप्तकामः स हि जीव इच्छेत् ।
यतेत चायं कृतकृत्यतायां काले सुखं विन्दति नैगमीयः ॥ १५४ ॥
स आप्तकामः स हि सर्वकामोऽप्यकाम एव प्रतिपद्यतेऽर्थः ।
सिद्धो हि काम्यः सकलोऽस्य सोऽर्थो नायं ततः कामयते तदर्थम् ॥ १५५ ॥
यं त्वर्थमृषी प्रतिपादयामः कामं तदर्थानुगमः स भाक्तः ।
या काचिदीहा क्वचिदस्ति सा हि प्राणाश्रया सोऽपि मनोव्यपेक्षः ॥ १५६ ॥
वृक्षाङ्कुरे याति यदूर्ध्वमेषोऽप्यादौ तथा कामयते स कामः ।
तदर्थसांमुख्यमथ प्रवृत्तिरथेप्सेत्यमन्यार्थमयं क्रमोऽस्ति ॥ १५७ ॥

## ५–असमाधेयप्रश्नोत्तरसूत्रम् ।

१ अथासमाधेयतया तु केचित् प्रश्नाः कृतास्तत्र समाश्रयः प्राक् ।
शारीरयज्ञानुविधिप्रभेदाद् याज्ञिकानां गोपथके च दृष्टाः ॥ १ ॥
ते गोपथब्राह्मणके तृतीयप्रपाठके पञ्चमतो निरुक्ताः । ( ३ । ५ । ६ )
एकादशे शतपथे द्वितीयप्रपाठके मानरेऽपि प्रोक्ताः । ( ११ । २ । ७ )
स्वैद्रायनेनाप्यमतीशिनाऽस्य प्रश्नप्रपञ्चस्य कृतः समाप्तिः ।
यथानुगः सोऽस्ति स यदविंशतिधैव इत्यमृतं त्वब्रवीमि ॥ २ ॥

# अथ साधर्म्यवैधर्म्यवादः ।

## ६—जीवेश्वरयोः समूलत्वनिर्मूलत्वाभ्यां भेदः १

१ आत्मा द्विधा व्यष्टिसमष्टिभेदाद् या व्यष्टयस्ता इह जीवशब्दाः ।
ते सन्ति सर्वे प्रतिबिम्बभूता मूलं यदेषामयमीश्वरोऽस्ति ॥ १५८ ॥

## ७—अहं-शब्दोंऽ-शब्दाभ्यां व्यपदेशभेदः २

२ ज्ञानस्य तस्येश्वरनाम्न एकस्यों शब्दतोऽस्ति व्यपदेश एवम् ।
ज्ञानानि यानि त्वथ जीवनामान्यहंपदेन व्यपदेश एषाम् ॥ १५६ ॥

## ८—क्षुद्र शरीराभिमानित्व-विश्वशरीराभिमानित्वाभ्यां भेदः ३

प्रत्यक्षमीदृशं सकलं शरीरं तदन्तरे कारणमस्य गूढम् ।
आत्मा हि स क्षुद्रतनौ स जीवः स ईश्वरो विश्वतनौ स एकः ॥ १६० ॥

## ९—चतुःकोशत्वनिष्कोशत्वाभ्यां भेदः ४ ।

४ ज्ञानस्वरूपे जगतः प्रकृती स ईश्वरो जीवगणश्च तुल्यौ ।
स्थितौ तु कोशाश्रयणेऽस्त्यपेक्षापेक्षाकृतो नाम तयोर्विशेषः ॥ १६१ ॥
यदीन्द्रियं तत्र गतार्थमात्रा मनस्तदन्तश्च तदन्तरे धीः ।
तदन्तरेऽहं विहरामि सोऽयं नित्यं चतुष्कोशगतोऽहमर्थः ॥ १६२ ॥
सर्वार्थमात्रा मयि संनिविष्टा दोषोपाधिका वास्त्यणुबीजरूपाः ।
न यस्य मात्रास्ति न तस्य बोधो दोषात् क्षयेऽप्यस्मृतिरप्रवृत्तिः ॥ १६३ ॥
प्रज्ञा मनोऽथेन्द्रियवर्गकोशाः परस्परेणाव्यतिरिक्तरूपाः ।
एकोदयेऽन्येऽपि भवन्ति साकं कस्याप्यपाये सकला अपेयुः ॥ १६४ ॥
नामा पशूनामिति केचिदाहुर्न तत्र बुद्धिर्न मनोऽन्य आहुः ।
एतन्मितान्तं भ्रममात्रमेषामेकस्याऽस्त्यन्यतयमस्ति ॥ १६५ ॥
अथेश्वरः कोशमपेक्षते न तं सोऽनन्तमात्रो न परैर्नियम्यते ।
न तत्र बुद्धिर्न मनो न चेन्द्रियं स्वतन्त्र एवार्थचयं विजानाति ॥ १६६ ॥

## कादाचित्कज्ञानत्व-नित्यज्ञानत्वाभ्यां भेदः ५ ।

५ ज्ञानं योऽयमनुभवो विवेकोऽप्यहं गतं तत्र नश्वरं स्यात् ।
नार्थमहत्त्वात् स्मृतिरिव योऽस्मिन् मात्रयेषां भवत्यनं पूर्णं ॥ १६७ ॥

## ११—विनाशित्वाविनाशित्वाभ्यां भेदः ६ ।

६ अर्था स्वभावात् परिवर्त्य रूपारूपान्यथात्वे व्ययन्ति जीवा ।
जीवास्तु इत्थं क्षयिणोऽप्यनन्ता य ईश्वरः सत्त्वविनश्वरः स्यात् ॥ १६८ ॥

## १२—अनुकथ्यत्वेश्वरजन्योकथ्यत्वाभ्यां भेदः ७ ।

७ अस्त्यस्यमुकथ्यं परित समन्ताद्यद्वत्यस्य निकरोऽर्कः ।
अशीतिरर्कोऽस्ति तदत्रमूला विद्युत्स्वरूपोऽस्ति तत स जीवः ॥ १६९ ॥
प्रकाशनाभौ हृदिविश्वबिम्बो भामण्डलं तस्य समन्ततोऽस्ति ।
भामण्डले भान्ति जगन्ति येनदमादीनि तद्वत् विद्युदस्म्यहं स ॥ १७० ॥
यत् तत्र चोकथ्यं तदहं स आत्मा योऽर्कोऽस्ति तज्ज्ञानमिति ब्रवीमि ।
ज्ञाने तु यः काममयं जगन्त्यात्यशीतिरेषाखिलमूलमुकथ्यम् ॥ १७१ ॥
आत्मा यथा कामयते तथाऽस्मिन्नुदेति कर्म तदमुष्य कर्म ।
कामो जगत् काममयः स आत्मा सोऽप्येन्यकामोऽश्रमतोऽस्य सोऽस्ति ॥ १७२
य ईश्वरो नित्यमयं सकामः स सर्वकामोऽस्य हि कोऽपिकामः ।
धीर्नाम जीवोकथ्यमिहोदितं स्याज्जीव चिदाभासमतो यदाम ॥ १७३ ॥
जीवोकथ्यमित्थं परमेश्वरः स्यात् कामो न तत्संभवतोश्वरेऽस्मिन् ।
तस्मादनुकथ्यः परमेश्वरोऽसौ सर्वज्ञ एषोऽस्ति च सर्वशक्तिः ॥ १७४ ॥
ता शक्तयस्तस्य भवन्ति कामाः कर्म्माणि तान्यस्य जगन्ति सन्ति ।
इत्थं कर्म्मरूपाणि च रूपनामान्येतत्त्रयं संमिलितं जगत्स्यात् ॥ १७५ ॥

## १३—असर्वजीवग्राह्यार्थत्व-सर्वजीवग्राह्यार्थत्वाभ्यां भेदः । ८

८ सर्वेऽपि जीवा निजजीवस्थमर्थं गृह्णन्ति नान्याशयदृष्टमर्थम् ।
तदीश्वरज्ञानगतं तु सर्वेऽविशेषतस्तेन स जीवभिन्नः ॥ १७६ ॥

## १४—नानात्वैकत्वाभ्यां भेदः । ९

९ नाना तु जीवा व्यवहारभेदाद् यथाऽथेया न तथेश्वरेऽपि ।
नानात्वलिङ्गं किमपि प्रपद्ये तेनेश्वरज्ञानमिदं सदैकम् ॥ १७७ ॥

## १५—व्यवस्थत्वैकरसत्वाभ्यां भेदः । १०

१० अचेतनं चेतनमित्यमेतज्जगद् द्विधास्तीश्वरजन्यमस्मिन् ।
स्वप्ने तु जीवे द्विविधं प्रबोधे जडं सुषुप्तौ तु जगन्न किञ्चित् ॥ १७८ ॥
केचिद्विदुर्जीववदीश्वरेऽपि स्युस्ता अवस्था इति तर्कयाम ।
सुषुप्तिरूपः प्रलयोऽथसृष्टिः स्वप्नोऽस्ति जाग्रत्यथ जीवमुक्तिः ॥ १७९ ॥

घटं तु पश्यामि यदा तदानीं घटावभासो न घटानुषक्तः ।
जपानुरागः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ॥ २२८ ॥
घयं तथार्थान् परिकल्पयामो यान् भावयित्वा पृथगेव तेषाम् ।
सत्ता हि तास्ता न तु सत्तया मे ते सन्ति यत् तान् हि पृथक् स्मरामः ॥ २२९ ॥
विज्ञातसत्ताश्रयवस्तुसत्ता चित्सत्तया भिद्यत इत्यवैमि ।
न धीः पृथक् चेत् कथमोदरांशं धृत्वाहमर्थान् जनयेदनेकान् ॥ २३० ॥
ज्ञानीयसत्ताऽर्थगता न चेत्स्यात् सा तर्हि तस्मिन् कुत आगतेति ।
अत्रोच्यते रूपवदत्र सत्ताऽप्याकस्मिकी संभवतीति मन्ये ॥ २३१ ॥
तैलं यदर्चिर्भजतीह तैलात्कर्माणि रूपाणि पृथग् भवन्ति ।
आयान्ति तानीह यतो यथा वा वियन्ति सत्तापि तथात्र भाव्या ॥ २३२ ॥
न कारणं ह्येति नवीनकार्य्यं तूदेति धर्मास्त्रि न वा भवन्ति ।
वस्तुस्वभावो हि तथा ततोऽस्मिन् न शङ्कयमित्यस्ति मतं तृतीयम् ॥ २३३ ॥

यद्वत्र नानात्वमिदं तु तस्य स्वरूपमेवास्ति तदस्य धर्मः ।
यश्चिज्जल भासति चित्रवर्णस्तद्वत्तथानद्वयवत् प्रसिद्धः ॥ २११ ॥
द्वैतं तु सत्तान्यतयैव मन्ये सत्त्वैकतायां बहु चैकमस्ति ।
उष्णीषकं ग्रामरतनं तु गनैश्चयेऽपि सुवर्णमेव ह्यायमर्थः ॥ २१२ ॥
ज्ञानं हि सत्ता न तदस्ति भिन्नं ज्ञानस्य सर्वं जगदस्ति रूपम् ।
कृत्स्नस्य तस्माज्जगतोऽस्य सत्ता ज्ञानस्य सत्तेन न भिद्यते सा ॥ २१३ ॥
अपूर्वशिल्प प्रतिरूपशिल्पे ज्ञानस्वभावा द्विविध प्रतीत ।
अपूर्वरूपाणि करोति यस्माद् गृह्णाति रूपाणि यथास्थितानि ॥ २१४ ॥
यदीश्वरज्ञानमनेन सृष्टं बहिर्जगत् तेन च सद्युतं न ।
ज्ञानं तथा रूपमुपैति तद्धि भिन्नं कचित्कल्पयते स्वरूपम् ॥ २१५ ॥
दुग्धं यथा रूपमुपैति दुग्ध ज्ञानं तथा नैति विकारभावम् ।
यथा समुद्र बहुधस्तरङ्गा नानाविकारास्तद्वदिदं जगत् स्यात् ॥ २१६ ॥
य ईश्वरो ज्ञानमयोऽस्ति तस्मिन् बहिर्जगन्नाम भवन्ति जीवाः ।
स एव जीवः च पुनर्जगत्स्यादिति द्वितीयं मतमस्ति साधु ॥ २१७ ॥

## ३–विषयाणां ज्ञानातिरिक्तत्वात् पृथक्सत्तावादः ३

१ अथापरं प्राहुरिदं यदैक्यं प्रस्तूयते साधु न तत् प्रतीमः ।
ईश्वरो भिन्न एव, जीवा भिन्ना, जगद्भिन्नमिति, त्रितयम् ॥ २१८ ॥
ज्ञानं प्रकाशो विषयास्तमोऽतस् कथं तयोः सम्भवतीह ऐक्यम् ।
ज्ञाने समाने विषया विभक्ता दृश्यन्त एते निहिताः पृथक् न ॥ २१९ ॥
ज्ञानं प्रमाणं सत एव सत्त्व प्रमीयते तेन यदास्ति भिन्नात् ।
ज्ञानात्पदार्थान् प्रतिपत्तिभेदात् दृश्याद्धि द्रष्टृ न दृश्यमेयात् ॥ २२० ॥
ज्ञानं तु कार्त्स्न्याद् यदशेषमेकं स ईश्वरो नाम पृथक् पदार्थः ।
तथैव जीवाश्च जगन्ति चाप्तु सत्तोभयेषां पृथगीश्वरात् स्यात् ॥ २२१ ॥
ज्ञानं यदज्ञानवृतं मलीमसं क्षुद्रं ध्यवस्योपहितं शरीरिणाम् ।
जीवः स मेध्यादनुपाधितः परादनिग्रहादीश्वरतो विभिद्यते ॥ २२२ ॥
तत्रेश्वरात्स्यादिह जीवनाम्नो ज्ञानाज्जगच्चोद्भवत पृथग्वत् ।
न कार्त्स्न्यतः किन्तु तदेकदेशादुद्भूय तत्रास्ति विभिन्नसत्ताम् ॥ २२३ ॥
नोत्क्षिप्तपयोदधिदुग्धयद्वा सुवर्णकुण्डलमृद्घटवद्वा नो वा ।
ज्ञानाज्जगत् तच्छरत्त दुग्धान्मन्ये जले बुद्बुदफेनवद्वा ॥ २२४ ॥
इयान् विशेषस्तु विभाति फेने वियन्ति तोयानि विकुर्वते च ।
ज्ञानं न क्वापि विकारि भाति प्रस्तौत्यपूर्वं जगदद्भुतं तत् ॥ २२५ ॥
बालस्य मन्येऽल्पमिवास्ति चित्तं यथाधिकं पश्यति विश्वमेव ।
तथास्य विज्ञानमुपैति वृद्धिं न क्षीयतेऽन्तर्जगतस्तु वृद्ध्या ॥ २२६ ॥
पृथक् सदप्यात्मनि सन्निविष्टं सर्वात्मना विश्वमिदं समस्तम् ।
आत्मा त्वसङ्गोऽस्ति न तेन लिप्तो नासज्जते किञ्चिदपीति चित्रम् ॥ २२७ ॥

घटं तु पश्यामि यदा तदानीं घटावभासो न घटानुपक्तः ।
अपानुरागः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ॥ २२८ ॥
एवं तथार्थान् परिकल्पयामो यान् भावयित्वा पृथगेव तेषाम् ।
सत्ता हि तास्ता न तु सत्तया मे ते सन्ति यत् तान् हि पृथक् स्मरामः ॥ २२९ ॥
विज्ञातसत्ताश्रयवस्तुसत्ता चित्सत्तया भिद्यत इत्यवैमि ।
न धीः पृथक् चेत् कथमीश्वरांशं धृत्वाहमर्थान् जनयेदनेकान् ॥ २३० ॥
ज्ञानीयसत्ताऽर्थगता न चेत्स्यात् सा तर्हि तस्मिन् कुत आगतेति ।
अथोच्यते रूपवदत्र सत्ताऽप्याकस्मिकी संभवतीति मन्ये ॥ २३१ ॥
तैलं यदर्चिर्यतीह तैलात्कर्म्माणि रूपाणि पृथग् भवन्ति ।
आयान्ति तानीह यतो यथा वा वियन्ति सत्तापि तथात्र भाव्या ॥ २३२ ॥
न कारणं ध्वेति नवीनकार्य्यं तूदेति धर्माश्च न वा भवन्ति ।
वस्तुस्वभावो हि तथा ततोऽस्मिन् न शङ्क्यमित्यस्ति मतं तृतीयम् ॥ २३३ ॥

---

# अथ ज्ञानसत्तयोः पौर्वापर्य्यमूलकोऽ
# ङ्गाङ्गिवादः ॥ (६)

## ४—ईशजगत्सत्ताया ज्ञाननिघ्नत्वम् ।

१ सत्तावशादस्त्युपलब्धिरस्योपलब्धितो योऽपलभेऽस्य सत्ताम् ।
प्रश्नस्य चैतस्य कृते समाधिर्योद्यान्तरङ्गिद्विजगद्विधाभ्याम् ॥ २३४ ॥
अस्तीश्वरज्ञानमतोऽस्ति तज्जगत् तथास्तिमज्ज्ञानमतोऽस्ति मज्जगत् ।
सत्तोपलब्धिश्च न भिद्यते मिथः स एक आत्मोभयथा प्रवर्तते ॥ २३५ ॥
ज्ञानं यदीत्रास्ति न चाग्रहीत्या भवेत् प्रकाशः सततं स्वभावात् ।
ग्राह्यग्रहीत्रि यदिदं द्विरूपं ग्राह्यं तु सामान्यमवैमि सत्ताम् ॥ २३६ ॥
यो ग्राहकः स द्विविधोऽस्ति जीवस्तदीश्वरश्चेति जगद्विधर्ता ।
ग्राह्यं तु सत्तामयमस्ति विश्वं ग्राह्यग्रहीत्रोरयि नाहृतत्वम् ॥ २३७ ॥

## ५—जैवज्ञानस्य बाह्यसत्तानिघ्नत्वम् ।

२ किन्त्वाश्वरज्ञानमथास्ति मद्बहिर्यदास्ति तस्मादुपलभ्यते जगत् ।
बहिर्न चेदस्ति घटस्तदा भवेच्छतोऽपि साक्षात् क्रियते न तद्घटः ॥ २३८ ॥
तस्माद्बहिर्वस्तुनि यास्ति सत्ता ततो मम ज्ञानमुदेति बाह्ये ।
मज्ज्ञाननिघ्नास्ति न वस्तुसत्ता सत्तावशाज्ज्ञानमुदेति मेऽस्मिन् ॥ २३९ ॥

## ६—ज्ञानमयजीवस्य बाह्यसत्तानिघ्नत्वम् ।

३ अस्मात्प्रमाणत्रयतश्च सिद्धो न ज्ञाननिघ्नैव तु वस्तुसत्ता ।
ज्ञानं यथा भासयतेऽर्थसत्तां सत्तापि गृह्णाति तथा चिदंशम् ॥ २४० ॥
जीवा सभेदात्त यथा विभिन्नज्ञानार्थसत्ताजनका भवन्ति ।
सन्त्येव वस्तूनि तथा चिदंशग्राहीणि तेभ्यस्त्वहमर्थसिद्धिः ॥ २४१ ॥
तदीश्वरज्ञानगतात्मरूपं जगद् मदज्ञाननिबन्धनं तत् ।
जीवात्मकज्ञानमिदं तु दृष्टं स तद्वैपरीत्याज्जगदर्थमूलम् ॥ २४२ ॥
न चेज्जगत् स्यान्न तदा हि साक्षी जीवाश्चिदाभासमया भवेयुः ।
सूर्यस्य यद्वत् प्रतिबिम्बहृद्ये जलस्य वा त्वस्य भयापक्षा ॥ २४३ ॥



# अथ त्रिसत्याद्वैतवादः ॥ ७ ॥

## ७–जडजीवेश्वराणां विशिष्टाद्वैतम् ।

१ इत्थं स्वरूपात् पृथगस्ति विश्वं जीवात्मकं यानि जगन्ति सन्ति ।
जीवा जगन्मूलतया च सन्ति प्रभुश्च तेषामयमीश्वरोऽस्ति ॥ २४४ ॥

२ जडजीवेश्वरभेदात् त्रीण्यधिकरणानि सर्वधर्माणाम् ।
आहुस्तान्यधिभूतं चाध्यात्मं चाधिदैवतं चेति ॥ २४५ ॥
जडाश्च जीवाश्च तथेश्वरश्च त्रिभिर्विशिष्टं यदिहैकरूपम् ।
तद् ब्रह्म तच्च द्विविधं परं चापरं च नातः परमस्ति किञ्चित् ॥ २४६ ॥
● अचित्तु कृत्स्नं पृथगेकमेकं सात्मास्ति जीवेन चिता प्रवेशात् ।
जीवश्च कृत्स्नः पृथगेक एकः सात्मेश्वरेणास्ति तदित्थमैक्यम् ॥ २४७ ॥
जीवस्य देहोऽस्ति जडैः कृतोऽयं जीवैः कृतो देह ईश्वरस्य ।
जीवः शरीरे विभुरेयमीशो जीवे विभुस्तन्मय एव जीवः ॥ २४८ ॥
चिताऽचिता चोपहितोऽयमीशश्चितोऽचितश्चानिशमेक ईशे ।
अथो विशिष्टं तु चिताचिता चेदपरं हि तं ब्रह्मपदेन वच्मि ॥ २४९ ॥
जीवस्य नाना प्रभवन्त्यवस्थाः स्वप्नादिका बन्धयुतोऽपि सोऽस्ति ।
अनन्तकल्याणगुणस्तु दोषैरस्पृष्ट एवेश्वर एव भाव्यः ॥ २५० ॥
क्षुधापिपासारहितो विशोको विमृत्युरेवं विजरो विपाप्मा ।
स सत्यसंकल्पकसत्यकामोऽप्यस्तीश्वरस्तत्कृपया तु जीवः ॥ २५१ ॥
जीवोऽस्वतन्त्रोऽस्य हि भुक्तिमुक्ती स्वतन्त्र एवेश्वर आतनोति ।
• तदीश्वरानुग्रहतस्तु जीवोऽप्यदोषकल्याणगुणाकरः स्यात् ॥ २५२ ॥
कृपा हि तत्कर्मण एव ईश्वरो यदानुगृह्णाति तदैव जीवतः ।
सर्वाणि कर्माण्यपमृज्य बन्धनादुन्मोच्य साम्यं निजमस्य पश्यति ॥ २५३ ॥
निर्दोषकल्याणगुणाकरत्वतः प्राकाम्यतः साम्यमिहास्य जायते ।
न त्वेष मुक्तो जगतः प्रसर्जनं रक्षां क्षयं चेश्वरवत् करिष्यति ॥ २५४ ॥
ब्रह्म द्विधा प्राहुरिदं परं चापरं च तत्रास्त्यनिरुक्तमाद्यम् ।
अव्यक्तमव्याकृतसूक्ष्मरूपं तदस्य विश्वस्य हि बीजमस्ति ॥ २५५ ॥
स्थूलं तु यद्विश्वमिदं विभाति ब्रह्मापरं तत् परिकार्यमेतत् ।
इदं परस्मादुदितं परस्मिन् स्थितं परस्मिंश्च विलीयते सत् ॥ २५६ ॥
तत्रापरस्यास्ति परेण तेनाभेदस्तदेकं ह्यभवद् द्विधेदम् ।
उद्भूय तस्मात् परतोऽपरं सत् पुनः परस्मिन् भजति प्रलीनम् ॥ २५७ ॥

---

* "तस्माद् युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् । आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे"
( भाग ११ । ७ । ९ ]

इति भागवते त्रयाणामेषां जगज्जीवेश्वराणामैक्यभावना विधीयते ।

प्रतिक्षणं तत्परतोऽपरोद्भवः पश्च चापैत्यपरं प्रतिक्षणम् ।
मध्येऽन्यथा रूपतयोद्भवः क्वचिद्विच्छिद्यते क्वापि नवं प्रवर्तते ॥ २५८ ॥
विशिष्टतोऽस्मात् परतो विशिष्टं स्वेतरं विश्वमिदं बभूव ।
विशिष्टयोर्नास्ति तयोर्न भेदस्तस्माद् विशिष्टाद्वयमेतदाहुः ॥ २५९ ॥
विशिष्टमेतद् द्वयमपरं परं वा सत्यैस्त्रिभिर्भिन्नतमं स्वरूपात् ।
अविच्छिदोऽशैरुदितं विशिष्टत्रिसत्यमेतत् प्रवदन्ति तस्मात् ॥ २६० ॥

## ८—जगज्जीवेश्वराणां सत्यत्वात् तद्विज्ञानस्य त्रिसत्योपनिषत्त्वम् ।

नैवं स्थिते विश्वमसत्यमेतज्ज्ञानं च सत्यं विषयाश्च सत्याः ।
ज्ञानं च जीवेश्वरभेदतः स्याद् द्विधा तयोर्विश्वमपि द्विधा स्यात् ॥ २६१ ॥
एकः स ईशो बहवस्तु जीवा एकं बहिर्धा जगदीश्वरस्य ।
अन्तर्जगन्त्यत्र बहूनि तु स्युर्नातः परं किञ्चिदिहास्ति वेद्यम् ॥ २६२ ॥
सर्वेश्वरोऽसौ जगदुच्यतेऽसज्जीवस्त्वयं स्यात् सदसत्स्वरूपः ।
वदन्ति तस्माद् भुवनं भविष्यन् भूतं च विज्ञाः सदसत्पदेन ॥ २६३ ॥
अहं हि सत्यं सदतः परेऽपि जीवा अहंत्वाद्विशेषसत्याः ।
यस्माच्च तेषामुपपत्तिरन्या तस्माज्जगत्सत्यमिति ब्रवीमि ॥ २६४ ॥
इत्थं जगज्जीवतदीश्वराख्यं तत्त्रयं सत्यमिदं परीक्ष्यम् ।
तथापि मुख्यः परमेश्वरोऽयं जीवा जगच्चेदमुपासतेऽलम् ॥ २६५ ॥
इत्थं त्रिसत्ये जगतस्तदीशितुः सत्यत्वमस्तीह परीक्षयेक्षितम् ।
ब्रह्माहमस्मीत्यहमर्थसत्यता त्वज्ञातमो भाति ततोऽन्ययोरपि ॥ २६६ ॥
एवं त्रिसत्योपनिषद्विशेषमतीय तत्त्वान्तरभेदकृत्या ।
उपासनाधर्म उपासकानां प्रवर्ततेऽनेकविधो जनेषु ॥ २६७ ॥

———o———

# ❀ अथ उपासनावादः (८) ॥

## ९—आत्मनि हृद्ग्रन्थिवशाद् बन्धप्रकारः १

१ एकत्र बिन्दौ कतिचिद्बलानीतरेतरेण ग्रथितानि चेत्स्युः ।
हृद्ग्रन्थिरेव ग्रथितस्ततोऽसावात्मा रसो बद्ध इवावभाति ॥ २६८ ॥
बलानि यावन्ति भवन्ति पूर्वाण्यपूर्वमत्र भ्रियते बलं चेत् ।
प्रवर्द्धयत्यात्मनि चेद्रसं तद् ग्रन्थिं द्वितीयं तु तदा वदामः ॥ २६९ ॥
तिरः शरः कन्दुकमेवमूर्ध्वं प्रक्षिप्यते तत्र हितं बलं तत् ।
न वर्द्धयत्यत्र रसं मृदद्वेत् काचो भवेद् ग्रन्थिरसौ द्वितीयः ॥ २७० ॥
हृद्ग्रन्थिमोकेन च बन्धमोकः स्यादात्मनस्तत्र रसो निसर्गात् ।
स्वयं स बद्धः स्वयमेव मुक्तो जगत् कदाचित् स कदाचिदात्मा ॥ २७१
यदस्त्यखण्डं विभु चैकरूपं बन्धान्मितिं प्राप्य स तत्र खण्डाः ।
यथा यथा चैव विमुक्तिमेयात् तद्ग्रन्थिभेदात् स विकासमेयात् ॥ २७२
आत्मा यदा बन्धमुपेत्यकस्माद् ग्राहस्तदा स्यादयमर्थसंज्ञः ।
बन्धप्रभावेण विभुः स आत्मा देहे धृतः सन् भवतीह देही ॥ २७३ ॥
अल्पज्ञतां याति शरीरबन्धादत्यन्तबन्धाज्जडतामुपैति ।
बद्धं पुनर्बन्धमुपेत्य बन्धं पुनः पुनश्चे लभते जगत्तत् ॥ २७४ ॥
मनो यदि प्राणगतिं प्रपन्नं वाक्त्वं गतं स्थूलदशामुपैति ।
तल्लीयते तेन विचित्तता स्यात् प्राणे क्षये स्यादिह पारवश्यम् ॥ २७५ ॥
यथा यथा बन्धमुपैति तस्मिंस्तथाधिकं स्यादिह पारवश्यम् ।
यथा विमुच्येत मनो विकासात् तथा क्रमेणैव भवेत् स्वतन्त्रः ॥ २७६ ॥
प्राणादियं वाक् प्रथमे तु बन्धे वागभ्यबन्धाद् भवतीह वायुः ।
वायुः पुनर्बन्धमुपेत्य तेजो बन्धाज्जलं तत् पृथिवी च बन्धात् ॥ २७७ ॥
पृथ्वी च बन्धादिह वृक्षपत्रं बन्धाद्य बन्धो मुहुरित्थमेति ।
भवेत् कथंचित् क्रममुक्तिरेषां पृथ्वी पुनः प्राणविधामुपैति ॥ २७८ ॥

## १०—बन्धमुक्त्युपायक्रियाया उपासनात्वम् २

२ जीवस्तु नात्यन्तमयं प्रबद्धः स्फुटं स विज्ञानमयोऽत्र दृष्टः ।
तथापि देहे भ्रममेव बद्धः प्रतीयते पाप्मनि मानयोगात् ॥ २७९ ॥
मुक्तः क्रमाद् बन्धमुपैति बद्धो विमुच्यते च स्वयमुत्क्रमेण ।
इत्थं स्वभावादिह बन्धमोक्षौ पर्यायतः संभवतो विविक्तौ ॥ २८० ॥
यया तु बन्धाद् भवतीह मुक्तो जीव क्रियामाहुरिमामुपास्तिम् ।
उपासनातो बलवान् विमोक्षः पुनर्न बन्धः क्रमते हामुष्मिन् ॥ २८१ ॥

जीवात्मकज्ञानमुपास्तियोगात् तदीश्वरज्ञानसमत्वमेति ।
बन्धस्य तस्मिन् पुनरप्रसक्तेर्न जीवतामेति स एकरूपः ॥ २८२ ॥
इत्येवमुक्तं बलभद्रसर्वेर्निसर्गसंभावितबन्धमुक्तेः ।
उपायभूतं तदुपास्तिकर्माथवाऽत्र वक्ष्याम्यधिकं च किञ्चित् ॥ २८३ ॥

## ११ ऐश्वरमनसि जैवमनःस्थिरीकारस्योपासनात्वम् ३

३ मनोऽस्ति जीवस्य तु चञ्चलं स्थिरं शान्तं नितान्तं परमेश्वरस्य तत् ।
स्थिरीकृतं वृत्तिनिरोधतो मनो जीवस्य योगं लभते परेश्वरे ॥ २८४ ॥
चक्षुः स्थिरं चेत् प्रतिबिम्बमस्थिरं न तत्र योगः प्रतिबिम्बचक्षुषोः ।
स्थिरीकृतःस्यात् प्रतिबिम्ब एव चेत् सांनिध्यमायाति स चक्षुषि स्वयम् ॥ २८५ ॥
यद्वत्ति योगं तमुपासनो मनः सांनिध्यमायाति हि जैवमैश्वरे ।
तत्संयमादीश्वरशक्तिरञ्जसा जैवे समायाति ततोऽर्थसिद्धय ॥ २८६ ॥
यो येन योगं लभते ध्रुवं तयोस्तने भवेत् पुष्कलधर्मसंक्रमः ।
उपास्यशक्तिध्रुवमत्र संक्रमत्युपासके साधु सवेदुपास्यते ॥ २८७ ॥

## १२—क्रिया-भक्ति-ज्ञानयोगाः ४

४ योगास्त्रिधा कर्ममुखेन, भक्त्या, ज्ञानेन कर्मास्ति महत्त्वहेतुः ।
भक्तिः सुसाध्याथ तृतीयमेषां जीवस्य तस्येश्वरसाम्यहेतुः ॥ २८८ ॥
न स्वार्थमिच्छन् न परार्थमिच्छन् निष्कारणं यद्विदधाति कर्म ।
सामान्यतः सर्वजनस्य यत् स्याद्धितावहं नाम स कर्मयोगः ॥ २८९ ॥
एकान्ततः स्वार्थमिहानपेक्ष्य प्रस्तौति यद्विश्वमतीनकर्म ।
समृद्धिमायाति हि तेन विश्वं सोपासना सिद्ध्यति विश्वमूर्तेः ॥ २९० ॥
यो मन्त्रयोगो लययोग एवामनस्कयोगो हठयोग एवम् ।
यो राजयोगश्च त एव योगाः सर्वे प्रसिध्यन्ति हि भक्तियोगाः ॥ २९१ ॥

## १३ आत्मार्पणरूपा प्रपत्तिर्भक्तियोगः ५

५ प्रपत्तिरेषात्मसमर्पणं यत्महेश्वरायैव करोति जीवः ।
युङ्क्ते स्वमंशं परतः परं वा स्वस्मिन् द्विधात्मार्पणमित्यमस्ति ॥ २९२ ॥
उपासना सा यदि जीवतन्त्रं जीवोऽर्पयेदीश्वरतन्त्रमध्ये ।
प्रजापतेः शिल्पमयं स्वशिल्पैः संसृज्य संस्कृत्य करोति कृत्स्नम् ॥ २९३ ॥
यतोऽयः प्राकृतधर्मः वेदो तन्त्रे निविष्टः स हि शिल्पयोगात् ।
आप्नोत्यवाप्नोति यदित्थमैशो स्वतुल्ययोगोऽस्ति स भक्तियोगः ॥ २९४ ॥

---

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग इति योगसूत्रविरोधाद्यथाभाषां च भायद्धाम स्वार्थेश्वरप्रणिधानरूपत्वात् । अतएवाह 'एकान्तत'–इति ॥

अपूर्वभावे यदि जीवबुद्ध्या क्रूसे निवेश्येश्वरभावमेदम् ।
अपूर्वमर्थं विदधद्बहिर्धा पुष्णाति विश्वं स च भक्तियोगः ॥ २९५ ॥
जीवस्थभावोऽस्य बहिर्जगत् तन्मृद्भावतूलादिभिरैशभावैः ।
भक्त्या युतं बाह्यजगद्गतं स्यात् वासोघटाद्यं स हि भक्तियोगः ॥ २९६ ॥
जीवो य आत्मानमपूर्वभावस्वरूपमैशेऽर्पयतीह भावे ।
तेनायमात्मा परमेश्वरस्थो भक्त्या भवेत् तेन स भक्तियोगः ॥ २९७ ॥

## १४–अपरा भक्तिः प्रेम्णा, परा भक्तिः श्रद्धया ६

उपासनं तद् द्विविधं प्रपद्येऽवरं परं चेति मनोविशेषात् ।
स प्रेम यत्रास्ति मनोऽवरं तत् परं तु स श्रद्धमनः कृतं स्यात् ॥ २९८ ॥
रजोऽनुयोगान्मनसि स्वतः स्यात् प्रेमा, व्यपाश्रित्य गुणांस्तु सोऽस्ति ।
प्रेमा गुणानीक्षत एव तांस्तानत्यल्पमात्मानममुं स पश्येत् ॥ २९९ ॥
गुणाननेकान् युगपन्न शक्तो द्रष्टुं ततस्तन्मनसि भ्रमं स्यात् ।
त्यागमहात्यन्तिककर्मयोगो नैकान्तता स्यादवरं ततस्तत् ॥ ३०० ॥
नानागुणप्रत्ययतश्च तत्र क्षिप्तं मनस्तत्र न योगसिद्धिः ।
उपास्यमात्मेतरतश्च पश्यन्नास्मिन् गतः स्यादवरं ततस्तत् ॥ ३०१ ॥
प्रेमा मनोबन्धनहेतुरस्माद्याह्रितसंपत् परदेवतायाम् ।
आनन्दमत्रानुभवत्ययं नानन्दः स्वयं स्यादवरं ततस्तत् ॥ ३०२ ॥
दृष्ट्वा गुणानेव गुणाश्रये यदि स्थितिं रक्षामेति मनोऽथ तत्र चेत् ।
दोषान् गुणान् वा न परं व्यपेक्षते श्रद्धा तदा सास्ति मनोऽत्र तन्मयम् ॥ ३०३ ॥
प्रेमा यदेति स्वयमाविशत्यं श्रद्धा तदा रूपमुदेति भिन्नम् ।
तद्रूपवत् तत्र मनः स्थितं स्यात् प्रेमवत् तत्र मनोऽस्ति यद्वम् ॥ ३०४ ॥
सत्त्यमाहुर्विषयास्तितायां अबाधितायां ग्रहणं दृढं चेत् ।
तदन्यथात्वग्रहणातिरेकाच्छ्रद्धानमुक्तं मनसः प्रतिष्ठा ॥ ३०५ ॥
श्रद्धेश्वरे प्रत्ययसंश्रयाहतश्चिरं स्थिरं भाति निरन्तरं यदि ।
श्रद्धा तदा स्याद् दृढभूमिरित्यतो महामहिम्नोऽल्पमहिम्नि संश्रयः ॥ ३०६ ॥

## १५–श्रद्धोपासनोदाहरणम् ७

यो नीलिमा व्योम्नि नमस्कारं न मन्ये यातुधानं तु कंचित् ।
उपास्महे कृष्णकरप्रसारं चिदात्मनो ध्यानमयं वयं तु ॥ ३०७ ॥
उपासते केऽपि समस्तभितप्रणाशि दुर्गं क्षणिकं च नाऽपम् ।
उपास्महे किन्तु [illegible] ॥ ३०८ ॥

## १६—श्रद्धोपासनायाः समानप्रत्ययप्रवाहरूपत्वम् । ८

८ आत्मा मनश्चेन्द्रियवर्ग एषां योगेन यज्ज्ञानमुदेति तत्र ।
प्रमेयरूपो भवति प्रमाता तं प्रत्ययं वैषयिकं प्रतीम ॥ ३०९ ॥
स प्रत्ययश्चेत् क्रियते समानप्रवाह एवं यदि तत्र धत्ते ।
श्रद्धामनारोपकृतामनन्यामभ्यासतस्तर्हि मनस्तथा स्यात् ॥ ३१० ॥
मनो भवेत् यद्विषयस्वरूपं तस्यात्मनोऽप्यत्र तथा स्थितिः स्यात् ।
१ श्रद्धामयोऽयं पुरुषोऽस्ति तस्माद् यच्छ्रद्ध एवोऽस्ति स एव सोऽस्ति ॥ ३११ ॥
२ उपासनं नाम समप्रवाहः संप्रत्ययो निश्चलवृत्तिरूपः ।
३ तस्माच्छ्रुतिः प्राह यथा यथा तं ह्युपासते तद्भवन्ति होति ॥ ३१२ ॥

## १७—ज्ञानयोगस्वरूपम् । ९

९ ये ये पदार्था जगति प्रसिद्धा अत्यर्थमेषां पृथगस्ति विद्या ।
विद्या जगत् तत् परमेश्वरस्थं तत्प्रेक्ष्य साक्षात् कुरुते परेशम् ॥ ३१३ ॥
अर्था हि यावन्त इमेऽखिलानां विद्या पृथक् नावगमाय शक्या ।
आत्मानमेव स्वमतः प्रविद्यादेकं स कृत्स्नाणुजगन्मयोऽयम् ॥ ३१४ ॥
आत्मानमेकं यदि कोऽपि विद्याद् यथार्थतः सर्वजगत् स विद्यात् ।
साक्षात्कृतस्तेन महेश्वरः स्यात् स एक भूयोऽत्र परात्मनि स्यात् ॥ ३१५ ॥

## १८—उपासनोपयोगः । १०

१० उपासनैषा त्रिविधोपदिष्टाऽऽत्मन स्यात् परमात्मयोग ।
सर्वत्र धर्मस्य हि तस्य लाभः स्वल्पोऽपि दुःखेर्महतो भयात्र ॥ ३१६ ॥
नोपासना काचिदिहास्ति तादृशी जीवस्य धर्मासफलं न वर्द्धते ।
उपास्य तु स्त्री यदि दुर्बलस्तदा विधिच्युते सास्त्यहेतेति श्रूयताम् ॥ ३१७ ॥

### इत्युपासनावादः ८ ॥

इति तृतीयकाण्डे विशिष्टाद्वैत विज्ञान नाम प्रथमं पर्व समाप्तम् ॥
( विशिष्टत्रिसत्योपनिषत् )

—:o—

---

१ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः,— इति भगवद्गीता
२ उपासनं नाम समानप्रत्ययप्रवाहकरणम्, — इति शाङ्करभाष्यम् ( ४ । १ । ७ ) ॥
३ तं यथा यथोपासते तदेव भवति,— इति छान्दोग्योपनिषत् ।

# अथ ईश्वरैकसत्योपनिषत् द्वितीयं पर्व

## तत्रादौ त्रिपुटीतादात्म्यम् ।

### १—जगज्जीवेश्वराणां त्रित्वनिरासः ॥

१ इत्थं त्रिसत्यं प्रवदन्ति सन्तः सन्तोपमायान्ति तु तत्र नान्तः ।
परे महान्तः प्रतिजानते ते सत्यं हि संभाव्यत एकमेव ॥ १ ॥
अस्तीश्वरस्तज्जगदस्ति नित्यं जीवाश्च तेषां च जगन्ति सान्त ।
इत्थं त्रिसत्याः प्रवदन्ति तत्र भ्रमस्त्रिधात्वं तदसत्यमस्ति ॥ २ ॥
ज्ञानात् पृथग् ज्ञेयकुलं तदित्थं प्राहुस्त्रिसत्या न तथा तु विज्ञः ।
ज्ञानादभिन्नः खलु तद्विवर्तः स ज्ञेयवर्गो न पृथक्पदार्थः ॥ ३ ॥

### २—प्रमाणस्येश्वरतन्त्रत्वम् ।

२ विभाति हि ज्ञानमिदं चतुर्भिर्भागैः प्रमाता प्रमितिः प्रमाणम् ।
प्रमेयमेतेषु च मातुरेव प्रमाणभिन्नत्रयमस्ति रूपम् ॥ ४ ॥
अहं प्रमाता प्रमितिस्तदंशुव्याप्तप्रकाशो बहिरर्थपृक्तः ।
यया प्रणाल्यांशुरयं बहिर्धा याति प्रमासाधनमिन्द्रियं तत् ॥ ५ ॥
एकोऽपि यद्रूपरसादिभिन्नाऽऽत्मना स निष्पद्यत आत्मरश्मिः ।
भिन्नेन्द्रियद्वारवशात् तदाहुस्तदिन्द्रियं भिद्यत आत्मरश्मेः ॥ ६ ॥
जीवात्मतन्मेतरदिन्द्रियं यद्रूपादि भिन्नप्रतिपत्तिमूलम् ।
बाह्यार्थवत् स्यात्तदपीश्वरीयज्ञानोद्भवं वस्तु न जीवसृष्टम् ॥ ७ ॥

### ३—प्रमितेः प्रमात्रा भेदाभावः ।

३ अथ प्रमाता प्रमितिः प्रमेयं जीवात्मसृष्टं त्रयमत्र रूपम् ।
तत्र प्रमातुः प्रमितिर्न तावत् प्रभिद्यते रश्मिविकाशरूपा ॥ ८ ॥
ज्ञानं प्रकाशो घनमेकनाभेरुत्थाय सर्वां दिशमभ्युपैति ।
ज्योतिर्घनो नाभिगतः स आत्मा ज्ञाता ततो ज्ञानमयं प्रकाशः ॥ ९ ॥
ज्योतिर्घनाज्ज्योतिरिदं पृथग्यत् प्रतीतमप्यस्ति न तद्विभिन्नम् ।
स्वं मण्डलं बाह्यमथान्तरं च द्विधा विभज्य प्रतितिष्ठतीदम् ॥ १०

### ४—अन्तर्बहिर्भेदात् प्रमेयस्य प्रमात्रा भेदाभेदौ ।

४ ज्ञाने तु यद्भाति जगत् तदुक्तं तत्र द्विधा संप्रतिपत्तिरस्ति ।
यदस्ति किञ्चिद्बहिरर्थरूपं तदेव मज्ज्ञानगृहीतमस्ति ॥ ११

यद्वाऽन्यदस्त्यन्यदिदं विभाति यदि जगद्बोधवदेव समस्ति ।
न तत् प्रपश्यामि तन्मतेऽज्ञाने प्रवेशं शमने गुरुत्वात् ॥ १२ ॥

## ५ अथ जीवान्तर्जगतोरैक्यम् ।

५ जपाकुसुमः स्फटिके विशुद्धे यथा तथा ज्ञानगतास्तदर्थाः ।
इत्थं वदन्तीति वदन्तु किन्तु ममैव नान्यत् पृथग् जगत्तत् ॥ १३ ॥
यद्यत् पश्यामि किमप्यवैमि तदस्ति सर्वं मम बोधरूपम् ।
अर्थस्य तद्रूपगमात् कथं स्वे स्वाश्रिमद्गतं स्यात् तदभिन्नमेतत् ॥ १४ ॥
बहिः स्थितार्थेन यदैव जीवात्मदृग्विदायाति कदापि योगम् ।
स तत्परिच्छेदमवाप्य तावत् स्वरूपं मलिनत्व भाति ॥ १५ ॥
ज्ञानं निरिच्छानिमिमं च दृष्ट्वा ज्ञानं तदन्तर्विकसन्ति कस्मात् ।
ज्ञानं तदूर्ध्वं तदधस्तदग्रे यज्ज्ञायते ज्ञानमिदं समग्रम् ॥ १६ ॥

## ६ अथ ज्ञानज्ञेयसंबन्धनिर्धारणम् ।

### ( ज्ञेयस्य ज्ञानस्वरूपत्वम् )

६ तथापि च द्वयमिदं प्रसक्तं ज्ञानात् पृथक्सत्तया प्रसक्ते ।
ज्ञेयं पिता पुत्रस्तदूतं वा तदेकसत्त्वं दधिदुग्धवद्वा ॥ १७ ॥
तद्भिन्नसत्त्वं तदभिन्नसत्त्वं क्षीरं यथा वा शरफेनयुक्तम् ।
एषा तृतीये मम संप्रपत्तिर्ज्ञानभिन्नज्ञेयविगाप्रतीतेः ॥ १८ ॥
तथापि च द्वैधमिदं यदुक्तं तद्भिन्नसत्त्वं तदभिन्नसत्त्वम् ।
अंशप्रभेदात्तु पृथक् तदूर्ध्वं विचंशमात्रं हि यथा न येषाम् ॥ १९ ॥
अभिन्नसत्त्वं हि तदंशमात्रं तत्रापि च द्वैधमनुप्रपन्नि ।
जात्यन्तरं योऽप्युदेति योधाद् यदाऽखिलं बोध्यमयं स बोधः ॥ २० ॥
ज्ञाने पृथक्सत्त्वतयाऽऽहितं तज्ज्ञानातिरेके जगदन्यसत्त्वम् ।
ज्ञानस्य रूपं हि तदात्मलाभो ज्ञानातिरेकेण पृथङ् न तेषाम् ॥ २१ ॥
सत्यं यदि स्याज्जगदेकरूपं सदाऽवतिष्ठेत न चान्तरस्य ।
भेदा भवेयुः स्वगता न येषां यो ग्राह्यबोधो भवतामभावः ॥ २२ ॥
ज्ञानं तु सत्यं जगतः स आत्मा दिग्देशकालैस्तु न मीयते सः ।
अस्यानवच्छिन्नतयाऽऽत्मनोऽर्थास्तादात्म्यभूता प्रतिभान्ति बोधे ॥ २३ ॥
ज्ञानं स्थितं निर्विकृतं विकारैरसत्सु सत्त्वेषु सदेकरूपम् ।
ज्ञानं हि सत्यं तदसत्यमस्मिन् स्थितं ततः सत्यवदेव भाति ॥ २४ ॥
इत्थं यदन्तर्जगदस्ति तन्मे ज्ञानं तदेवाहमिति प्रसिद्धम् ।
ज्ञानं हि मद्रूपमथास्य विदं मज्ज्ञानरूपं तदभिन्नमेकम् ॥ २५ ॥

## ७ ज्ञेयस्य ज्ञानरूपत्वे आक्षेपः ।

७ अत्राहुरेके किल संभवेदिदं नेदृशेत यद्यर्थगणस्त्वन्वता ।
यद्यात्मनि द्रष्टरि दृश्यसंनिधावसंनिधौ वा न विशेष उद्भवेत् ॥ २६ ॥
ज्ञानाद्यदि ज्ञेयकुलं न भिद्यते प्रजागरस्वप्नसुषुप्तयस्तदा ।
न संभवेयुः क्वचिदात्मनो दशा अर्थान्वयानन्वयतस्तदुद्भवाः ॥ २७ ॥
सार्थो हृषीकैर्मनसा सहायवानात्माऽस्तुतेऽर्थास्तु बहिर्जगद्गतान् ।
स जागरः, स्वप्नदशात्वनिन्द्रियो मन.स्थमर्थं यदि भासयत्ययम् ॥ २८ ॥
अनिन्द्रियो यद्यमना बहिर्जगद्यान्तर्जगद्य प्रतिचेष्टते न चेत् ।
नास्ति द्वितीयं न ततोऽर्थभासनं सुषुप्तिरद्वैतदशा तदात्मनः ॥ २९ ॥
अर्था अहंज्ञानसमुद्भवा यदि त्वात्मप्रतिष्ठा न पृथक् स्युरात्मनः ।
अद्वैततोऽर्थानवभासनात्मिका सुषुप्तिरेषा न तदोपपद्यते ॥ ३० ॥

## ८—तदाक्षेपनिरासः ।

८ अत्रोच्यते मानसकोशवानयं ह्यात्मा स जीवः परमेश्वरोऽपि वा ।
इन्द्रो मनो व्योम बहिस्तथान्तरं तत्रार्थरूपोदय आत्मरश्मिभिः ॥ ३१ ॥
यथा बहिर्धा जगदाश्रयायाकाशो बहिर्धा किल भूमिकास्ति ।
अन्तस्तथान्तर्जगदाश्रयायाकाशो मनो नाम च भूमिकास्ति ॥ ३२ ॥
यथा रवेः रश्मिकुलं पराहतं वायौ प्रकाशं जनयेदितस्ततः ।
तथा मनस्येव पराहतैरमी अर्था भवन्त्यात्मगभस्तिभिः स्फुट. ॥ ३३ ॥
बहिर्मनस्यात्मगभस्तयो गता. प्रजागरार्थं जनयन्ति बाह्यतः ।
अन्तर्मनस्यात्मगभस्तयः स्थिता स्वाप्नान्तिकार्थानुपपादयन्ति तान् ॥ ३४ ॥
यदा मनः फेन च भूयसा मनोर्थकारिता ह्युत्तमसाभिभूयते ।
धूमावृतव्योमनि दीपकप्रभावदात्मनो ज्योतिरिहापवृज्यते ॥ ३५ ॥
अप्राप्य योगं मनसायमात्मा नार्थान् स उत्पादयते ततोऽयम् ।
वक्ताऽपि नो वक्ति न लोकते वा द्रष्टापि मन्तापि न मन्यते वा ॥ ३६ ॥
नन्वात्मा विभुरस्ति सर्वगो न तस्य योगो मनसा विलुप्यते ।
अत्रोच्यतेऽर्कप्रतिबिम्बवज्जलेऽस्थेवा मनःस्थावरणं च केनचित् ॥ ३७ ॥
मनोऽपि चाकाशमिदं तदात्मनः प्रोद्भूय चालम्ब्य तमेव तिष्ठति ।
न चात्मनोऽन्यत्र मनोऽस्ति भासते तत्रार्थवर्गः पुनरात्मनो भवेत् ॥ ३८ ॥
अहं मनोमण्डलमध्यवर्ती स चित्घनो मण्डलगाश्रितोऽर्था. ।
एवं त्रिवृद्रूपमहंपदार्थं मन्ये ध्रुवं तत् त्रयमेकवस्तु ॥ ३९ ॥

## ९—अथ ईश्वरबहिर्जगतोरैक्यम् ।

९ तथैव विज्ञानघनः स ओमिति प्रवर्तते मध्यगतस्तदाश्रितम् ।
अनन्तधैर्ज्ञानिकनित्यमण्डलं तन्मण्डले ज्ञानविजृम्भणं जगत् ॥ ४० ॥

यदस्ति मज्ज्ञाननिमित्तमन्तर्गूढं तदेशं जगदीश्वरो वा ।
एकं महाज्ञानमिदं बहिर्वा जगत् तदेतच्च विभाव्यनेके ॥ ४१ ॥
तथापि रूपाणि भवन्तु नाना ज्ञानं तु रूपोपहितं न भिन्नम् ।
रूपाण्यसत्यानि विनाशवत्त्वात्तद्वस्तु नो नश्यति तद्धि सत्यम् ॥ ४२ ॥
ज्ञानं हि सर्वं जगत स आत्मा दिग्देशकालैस्तु न मीयते सः ।
अस्यानवच्छिन्नतयाऽऽत्मनोऽर्थास्तादात्म्यभूता इह सन्त्यदृश्याः ॥ ४३ ॥
यद्ज्ञान नानाप्रतिपत्तिकमतद्रूपनाशाः परिवर्तनानि ।
तद्रूपभेदा अपि निर्विशेषं तदैश्वरं ज्ञानमतस्तदेकम् ॥ ४४ ॥
ज्ञाने गिरिर्ज्ञाननिमिमे च वृक्षा ज्ञानं तदन्तर्गिरयाणि कक्षाः ।
ज्ञानं तदूर्ध्वं तदधस्तदग्रं यज्ज्ञायते ज्ञानमिदं समग्रम् ॥ ४५ ॥
यत्तु त्रिसत्या इह वेद्यवेत्रो पृथक्त्वमाहुर्न तदस्ति साधु ।
बोधो हि बोद्धुः स च बोध्यगर्भो बोधस्य रूपान्तरमप्यनन्यत् ॥ ४६ ॥
यदिन्द्रियं जीवगतं तदीश्वरादुपात्तमासीदिति नेश्वरे तु तत् ।
कुतश्चिदायाति ततोऽत्र वित्तयो वेद्यानि वेत्ता त्रिवृदेक ईश्वरः ॥ ४७ ॥
आत्मैव विज्ञान महाप्रकाशो विज्ञानमेवास्ति जगत् तदित्यम् ।
तादात्म्यमेतं जगदस्ति भिन्नं न हीश्वरादीश्वर एव विश्वम् ॥ ४८ ॥
यतोऽमितत्वं तत एव चास्मिन्नानन्त्यमस्माच्च निराकृतित्वम् ।
एकत्वमस्मादविशेषताऽस्मात् सतोऽसतो वा न स भिद्यतेऽर्थैः ॥ ४९ ॥

## १० अथ जीवेश्वरयोरैक्यम् ।

१० सत्यं यदौ नाम विदन्ति नित्यं विज्ञानमानन्दमनन्तमेकम् ।
तद् ब्रह्मशब्देन वदन्ति तस्मादहं च आत्मैव स नास्ति भिन्न ॥ ५० ॥
यदीश्वरः सर्वगतः स एकः सर्वप्रतिष्ठास्ति तदैव जीवः ।
तत्र प्रतिष्ठां लभतेऽथवाऽयं स्वे स्वे तु सर्वेश्वरवन्महिम्नि ॥ ५१ ॥
न स्वे महिम्न्येव पृथक्त्वमेष्टव्याप्यावभेदात्तदुपलम्भहेतोः ।
यदीश्वरे तर्हि जगद्यदेते जीवा अपि स्युर्जगदेतदात्म्यात् ॥ ५२ ॥
अनन्तविज्ञानघनः स ईशस्तस्यैव मात्राभिरिमे जीवाः ।
अहं परे वेति पृथक्तया स्युः समष्टितद्व्यष्टितोऽत्र भेदः ॥ ५३ ॥
तदीश्वरज्ञानगताश्चिदंशा बुद्ध्या धृता ईश्वररूपसाम्यम् ।
आयान्ति तद्वद् विषयं भजन्ते ते स्युश्चिदाभासमया हि जीवाः ।
यथास्य सूर्यस्य विकाशमण्डलं ह्येकं तदादर्शविभेदतः पृथक् ।
विभिन्नपात्रेषु जलेषु भेदतो भायाश्चिदाभासविभिन्नता तथा ॥ ५५ ॥
सूर्याविधा सूर्यसमानरूपा बिम्बाः समन्तात् परियान्त्यनन्ताः ।
त एव काचे च जले दृष्टा पृथग्वदाभान्ति तथा वयं स्म ॥ ५६ ॥
व्याप्नोति यावत्तु विकाशमण्डलं स तावदात्मा रविरेक दृश्यते ।
प्राग्वारिधौ पश्चिमवारिधौ तथा भिन्नोऽपि बिम्बो न रवेर्विभिद्यते ॥ ५७ ॥

ज्ञानप्रकाशा इह यावदास्थितास्तावान् स एकः परमेश्वरः स्थितः ।
न वै चिदाभासतया पृथक् पृथग् दृष्टोऽप्युपाधीतर एक ईश्वरः ॥ ५८ ॥
अखण्ड एकः परमेश्वरः स्थितः साम्येन भात्येव समन्ततः सदा ।
क्वचित् क्वचित् किन्तु कदाचिदासते चिद्ग्राहिणस्ते न विभाति खण्डवत् ॥५९॥
तमो रजः सत्वगुणातिरेकात् तज्जन्ममृत्युव्यतिरेकतश्च ।
यज्जीवनानात्वमुशन्ति तत्र ज्ञानेऽहमर्थे हि तदर्थबाधात् ॥ ६० ॥
या त्वात्मनः सा प्रकृतिः पुरोक्ता यया प्रकृत्याऽहमयं धृतः स्याम् ।
सर्वे गुणास्तत्र वसन्ति जन्मादयोऽपि तस्या न चितः कदापि ॥ ६१ ॥
प्रत्यात्म सैवा प्रकृतिर्विभिन्नोपतिष्ठते किन्तु जगत्तदस्ति ।
अथो चिदाभासत आस्तु योऽसावहं स जन्मादिविकारशून्यः ॥ ६२ ॥
उपाधिभेदादिह भेदकृत्सायपि स्वयं चित्र विभेदिमेति ।
सर्वे चिदाभासगताश्चिदंशा एकश्चिदात्मा परमेश्वरोऽस्ति ॥ ६३ ॥

## ११—प्रतिबिम्बसमर्थनम् ।

११ अत्राहुरेके परमेश्वरस्य न संभवन्ति प्रतिबिम्बभूताः ।
जीवा यतो नास्ति जगत् न च स्वं स्वस्मिन् कदाचित् प्रतिबिम्बितं स्यात् ॥६४॥
सूर्यातिरिक्ते मुकुरे जले वा रश्मिः परावर्तित एव रूपम् ।
दधाति किन्त्वत्र परेशतोऽन्यत्नो वै परावर्तनहेतुरस्ति ॥ ६५ ॥
अत्रोच्यते नास्ति जगत्न तावद् यथात्र पश्यामि तथा तदस्ति ।
ज्ञानेतरत्वं जगतो निरस्तं ज्ञानाद्विना सिद्धमिदं न भिन्नम् ॥ ६६ ॥
यद्याप्यसत्यत्वममुष्य मन्यामहे तदप्यस्य निजास्तितायाः ।
निराक्रिया ज्ञानगतां तु सत्तामालम्ब्य सर्वं जगदेतदस्ति ॥ ६७ ॥
सूर्य्या यथार्को व्यवहारपक्षे रश्मि परावर्तयतेऽपि तस्मिन् ।
तथा परेशः परमार्थपक्षे सृष्ट्वेदमत्र प्रतिबिम्बितः स्यात् ॥ ६८ ॥

## १२--ईश्वरैकसत्यतास्थापनम् ।

१२ आनन्द एवेश्वररूपमग्र्यं ज्ञानं बलं द्वौ भजतस्तदंशौ ।
याः शक्तयस्ता हि पृथग्बलानि समुच्चयाच्छक्तिघनस्तु सत्ता ॥ ६९ ॥
ज्ञानानि जीवाः प्रभवन्ति सर्वे बलानि सर्वाणि जगन्ति सन्ति ।
कथं नु तानीश्वरतः पृथक् स्युर्यस्त्वं सर्वं नु जगत् सजीवम् ॥ ७० ॥
ग्राह्य ग्रहीत्रियमिदं द्विधास्ति स्वभावतो ब्रह्म ततो द्विधेदम् ।
प्रदृश्यते जीवजगद्विभेदात्र वस्तुतो जीवजगद्विभेदः ॥ ७१ ॥
जीवो जगच्चेत्युभयं तदेकमभूतमस्तीत्यत एव मन्ये ।
सर्वं जगत् प्रत्ययनिष्ठमेकं तादात्म्यमापन्नमिदं विभाति ॥ ७२ ॥
न तर्कतः किन्तु स ईश्वरो मे प्रतीकतोऽप्यक्षमियोपलब्धः ।
सत्तां परिज्ञानमयो सुखं वा नाद्यातमां पश्यति को जनेषु ॥ ७३ ॥

या निर्विशेषा परमेह सत्ता निःशेषविज्ञानमनुपयो यः ।
परास्ति या सर्वसुखस्य काष्ठा सत्ता चिदानन्दघनः स ईशः ॥ ७४ ॥
गोत्वं पशुत्वं च सचेतनत्वं द्रव्यत्वमर्थत्वमिति क्रमेण ।
संपद्यते यः परमोऽत्र भावः स ईश्वरः सा परमात्र सत्ता ॥ ७५ ॥
यास्तूलतोऽश्मरुदग्निवज्रादिशक्तयोऽप्युत्तरशक्तिनिघ्नाः ।
तासां पराशक्तिरशेषशक्तिः स ईश्वरः सा परमात्र सत्ता ॥ ७६ ॥
एकस्य यज्ज्ञानमतः परस्याधिकं तथान्यस्य ततोऽधिकं च ।
यतोऽधिकं नास्ति भवेद्ध्रुवं सा माया पराऽसौ परमेश्वरोऽस्ति ॥ ७७ ॥
एकस्य मोदोऽधिकः परस्य ततः परस्यापि ततः परस्य ।
यतोऽधिको नास्ति ततो भवेद्ध्रुवं सा माया परासौ परमेश्वरोऽस्ति ॥ ७८ ॥
माया मिता यावदिहानुभूयते तावत्ततोऽन्यामपि धीरपेक्षते ।
स्वयिथमाप्य परमभ्युपैति धीर्मायामनन्तामिमितां स ईश्वरः ॥ ७९ ॥
* आनन्दमोमक्षरमस्ति सत्यं नित्यं हि विज्ञानमनन्तमेकम् ।
यच्चिदाभासमयास्तदंशा जगत्तु तत्कर्मचितो विवर्तः ॥ ८० ॥
ब्रह्माऽद्वितीयं तत एकमेवेत्याचक्ष्महे विश्वमिदं समस्तम् ।
ब्रह्मैकमेवं वयमप्यनन्ता ब्रह्मैव नातः परमत्र किञ्चः ॥ ८१ ॥

## १३—ऐक्यसमन्वयः ।

१३ जीवात्मनाऽन्तर्जगदस्त्यभिन्नं परमात्मनैवं च बहिर्जगत्तत् ।
जीवात्मनां यत् परमात्मनैक्यं मन्यामहे तेन तदेकसत्यम् ॥ ८२ ॥
वाक् प्राणतः प्राणकला मनस्तः प्रादुर्भवत्येवमिमा अवस्थाः ।
एकस्य तासामिदमेतदात्म्यं मन्यामहे तेन तदेकसत्यम् ॥ ८३ ॥
(१) अस्तीति बोधो,ऽपि च (२) सोऽस्ति, (३) बोधो रसः, (४) स बोधोऽपि च बोध
(५) रसोऽस्ति, (६) सत्तापि रसो, न चान्यन्मन्यामहे, तेन तदेकसत्यम् ॥ ८४ ॥

* ( ओम = अक्षरम )

| | | | |
|---|---|---|---|
| 'अस्ति'—इति बोधरूपम् = धर्मनिरपेक्ष ज्ञायते<br>बोध अस्ति = तदिदं ज्ञानं सत्तावत् | ज्ञानेनानुगृह्यते सत्ता<br>सत्तयाऽनुगृह्यते ज्ञानम् | ज्ञानेनाप्यविनाभूता सत्ता<br>सत्तयाप्यविनाभूतं ज्ञानम् | १<br>२ |
| 'रस' इति बोधरूपम् = रस इतिकृत्वा ज्ञायते<br>बोधो बोद्धा बोध्य इति रसः = तदिदं ज्ञानं रस | ज्ञानेनानुगृह्यते रसः<br>रसेनानुगृह्यते ज्ञानम् | ज्ञानेनाप्यविनाभूतो रस<br>रसेनाप्यविनाभूतं ज्ञानम् | ३<br>४ |
| रस अस्ति = "यमाधारः" कश्चिदस्ति<br>सत्ता रस = ज्ञानक्रियालम्बनत्वात् | सत्तयाऽनुगृह्यते रस<br>रसेनानुगृह्यते सत्ता | सत्तयाप्यविनाभूतो रस<br>रसेनाप्यविनाभूता सत्ता | ५<br>६ |

१४ ये ये त्रिसत्यैस्त्रिविधा इहोक्ताः सर्वे विशेषास्त इमे भवन्ति ।
सामान्यतस्ते पृथगुद्धृताः स्युः स निर्विशेषः परमो न आत्मा ॥ ८५ ॥
सर्वे विशेषा असदेव रूपं तत्राविशेषस्य सदेव रूपम् ।
असम्भवं सद्यदखिलं प्रतीमस्तस्मात् समस्तं सदसद् वदामः ॥ ८६ ॥

# १४ उपासना ।

१५ यदीश्वरे स्वात्मसमर्पणं धिया विधाय स्वातन्त्र्यधियं विमुञ्चति ।
सोपासना तत्र च पीठिकात्रयी क्षुद्रैस्तु सेवा क्रियते मनोरिव ॥ ८७ ॥
कार्यक्रिया द्रव्यगतं निरस्यते द्वैतं त्रिधाऽद्वैतमिदं विधीयते ।
क्रमत्रयं तत्क्रमतो विधूयते मध्यैः कृता मध्यमपीठिका हि सा ॥ ८८ ॥
"विकल्पिता वस्तुतया विलोकयत्यैक्यं यदा कारणकार्यवस्तुनः ।
यदीश्वरे मृद्घटयोरिवात्मनोऽप्यैक्यं तदद्वैतमुपैति भावतः ॥ ८९ ॥
ददाति भुङ्क्ते स्वपिति प्रबुध्यते यदन्मनो वाक्तनुभिः करोत्ययम् ।
नाहं करोमीति यदीश्वरेऽखिलं पश्येत् क्रियाद्वैतमिदं स पश्यति ॥ ९० ॥
सर्वात्मकेशैक्यधिया यदात्मनस्तथेतरेषामपि सर्वदेहिनाम् ।
स्वस्यार्थ कामार्थ समानमीक्षति द्रव्याभिताद्वैतमिदं स पश्यति" ॥ ९१ ॥
( भागवते ७ । १५ )
यां भूतशुद्धिप्रतिपत्तया त्रिधा विलोप्य भूतप्रतिपत्तिमीश्वरे ।
विलापयत्यात्मसमस्तविग्रहं स ईश्वरीभावमुपेति योगतः ॥ ९२ ॥
"शिरस्तमेतदक्षरस्य वासना यतोऽप लक्ष्यं तु तदक्षरं परम् ।
आयम्य तद्भावगतेन चेतसा संधाय विध्येत स हि तन्मयो भवेत् ॥ ९३ ॥
आत्मा शरो वा प्रणवो धनुः इत्यक्षरं लक्ष्यमितीव विक्षितः ।
प्रयमत्तः कुशलं प्रबोधयेद् शरो यथैवं स हि तन्मयो भवेत्" ॥ ९४ ॥ ( मुण्डके २ । २ )
"अक्षाणि चित्ते तदु वाचि मानसात्मने तु तां तं प्रत्यक्सर्वेऽपि तम् ।
बिन्दौ च नादे तमिमं लिनात्यपि प्राणं महत्यात्मनि तं तमीश्वरे" ॥ ९५ ॥
( भाग ७ । १५ )
यद्योसमा स्वात्मसमर्पणक्रिया सोपासना चित्तसमाधिकारिणाम् ।
यत्र स्थिरं द्वैतमशेषतो न चेद्विलुप्यते भक्तिरियं न सोत्तमा ॥ ९६ ॥
देवर्षिरित्थं निजगाद नारदो मकारमणीस्तत्प्रतिपत्तया त्रिधा ।
उपासको भक्तियशात्महेश्वरे सायुज्यमाप्नोत्यभयं च विन्दति ॥ ९७ ॥
या भेदधीः सा भ्रमस्त्वसत्या तामास्थितः श्रेयसि नैति योगम् ।
सत्यं त्वभेदं प्रतिपद्य जीवः स्यादीश्वरः शान्तघनः प्रसन्नः ॥ ९८ ॥
अणोरणीयान् महतो महानयं विदन्नीश्वरो विश्वमिदं विधारयन् ।
ज्ञानात्मकः संशयमुच्छिनत्ति यः स्यात्तेऽप्यंतेऽस्मिन्नयमास्पदं धियः ॥ ९९ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ १ ॥

इति मधुसूदनविद्यावाचस्पतिप्रणीते ब्रह्मविज्ञानशास्त्रे
ईश्वरैकसत्योपनिषद् संपूर्णा ॥

—:०:—

# मूलोपनिषदि ।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| १ | ३ | काण्ड | काण्डः |
| १ | १७ | त्येत्त्रयं | त्येतत्त्रयं |
| २ | ७ | द्रष्ट | द्रष्ट् |
| २ | ७ | निभाति | विभाति |
| २ | ११ | स विकार | सविकार |
| २ | १५ | द्रष्ट | द्रष्ट |
| २ | २१ | चान्ये न | चान्येन |

# कृष्णत्रिसत्योपनिषदि ।

| | | | |
|---|---|---|---|
| ३ | ४ | तु | नु |
| | ५ | परंत्रयं | परं त्रयं |
| | १८ | विरूद्ध | निरुद्ध |
| ४ | १ | स त्तापि | सत्ताऽपि |
| | १० | मोक्ष्ये | मोक्षे |
| | ११ | तद्धेत्यथ चेत्य | तद्धेन्यथ चेत्य |
| | २३ | विभातिविद्या | विभाति विद्या |
| | २६ | क्रियान्वा | क्रियान् वा |
| ५ | २ | भाति सिद्धा | भातिसिद्धा |
| | २ | स्ति सिद्धा | स्तिसिद्धा |
| | १० | ज्ञायमानाद्धि | ज्ञायमाना हि |
| | १२ | तृथक् | पृथक् |
| | १४ | स्तितासंविदि | स्तिता संविदि |
| | १६ | पाप्मा प्रसङ्ग | पाप्माऽप्रसङ्ग |
| | २५ | तीप्यतेत्रा | क्षीप्यते वा |
| ६ | २३ | भाति भिन्ना | भातिभिन्ना |
| ७ | ४ | सत्तन्य | सद्न्य |
| ८ | १ | स विकल्प | सविकल्प |
| | १ | यद्थ | यदर्थं |
| | २ | आकारित | अकारितं |
| | २५ | मर्थ | मर्थं |
| | २५ | घृस्तिभाग | घृस्तिभागु. |
| | ३५ | प्रभृद्याम् | प्रभृद्याम |

| पृ० | पं० | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| १० | २५ | ज्ञानोदया- | ज्ञानोदय |
| ११ | ३१ | पृथक | पृथक् |
| | ३३ | पृथक | पृथक् |
| १२ | १२ | त्युत्कस्य | त्युत्कस्य |
| | १५ | याति | प्रयाति |
| १३ | २३ | शोका | शोको |
| | ३० | तेतत् | ते तत् |
| १४ | १६ | यचिचत् | यचिघ्येत् |
| | १६ | रमेत् | रमेत |
| १५ | १० | मृत्युमृत्यु | मृत्युर्मृत्यु |
| | १२ | परिपूति | परिपूर्ति |
| | २१ | मुखेयत | मुत्वयत |
| | ३२ | ध्याःम | ध्यात्म |
| | ३४ | हन्ति | हन्ति |
| १६ | ५ | भ्रिनि | धिग् वि |
| | १४ | कामोऽस्ति | कामेऽस्ति |
| | १६ | भयं न | भयं नु |
| | ३२ | प्रवर्तते | प्रवर्तते |
| १७ | ११ | कपालये | कपालये |
| | १२ | त्यक्ता | त्यक्तो |
| | २३ | वर्मणा | वर्मण |
| १८ | २२ | माना कृम | मानाकृत |
| | २२ | थवावचित् | थवा कचित् |
| २० | १८ | तद् यदि | तद्यदि |
| | २२ | कन्वित् | कन्वित् |
| २१ | १ | सामध्यम् | सामर्थ्यम् |
| | ८ | प्रतिपूर्ति | प्रतिपूर्ति |

## पूर्णद्विसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठः | शुद्ध पाठः |
|---|---|---|---|
| २२ | १५ | घनो परिस्तर | घनोपरि, स्तर· |
| | १७ | रम्यति | पत्स्यंति |
| | १६ | पत्स्य ती | पत्स्यंती |
| | २८ | हारो | हादो |
| २३ | ५ | पूर्ण | पूर्णं |

| पृ० | पं० | अशुद्ध पाठ. | शुद्ध पाठः |
|---|---|---|---|
| | ३२ | ततान्य | ततोऽन्य |
| [illegible] | ८ | ग्रहणो | ग्रहणं |
| [illegible] | १२ | विनश्य | निमृश्येति वा पाठ. |
| | ३० | दुष्टोऽपि | दृष्टोऽपि |
| [illegible] | १२ | स्थथा | स्तथा |
| [illegible] | १७ | कर्म्मणे | कर्म्मणो |
| | २२ | भेद्स्तु | भेदास्तु |
| [illegible] | ८ | ज्ञात | ज्ञांत |
| [illegible] | १ | तनह | तयेह |
| | २ | स्वभोज्ये | स्वभाग्ये |
| | २५ | पोऽस्ति | पोऽस्ति |
| १२ | १ | लाह | लोह |
| | ३ | माति | मान्ति |
| | १२ | कृष्णोऽतिसूक्ष्मावरणो | कृष्णोऽतिसूक्ष्मावरणं |
| | २१ | स्यन्तु | स्यं तु |
| | २६ | वृत्ता | वृत्तौ |
| १३ | ११ | रूपाम | रूपमि |
| | १२ | तयानं मात्रा नि | तयोर्न मात्रा नि |
| | २१ | वलस्तु | वलात्तु |
| १४ | १८ | सहढा | सुदृढा |
| १५ | १३ | चूणतु | चूर्णं तु |
| | १७ | स्रया· | स्रय. |
| | १८ | ऋचा | ऋचां |
| | २१ | अशीक्ष्णं तानाङ्कुरदूदवृत्या सह-वेचाम्नय सान्मुद्गरया तानि | |
| १६ | ११ | प्राणा | प्राण |
| | १३ | विधद्रे | नियद्रे |
| | २४ | धीयते | धीयन्ते |
| | २५ | भित्राणि | मित्राणि |
| २७ | १७ | न्यधार | न्यधरा |
| | १८ | इत्थं तु | इत्थं तु |
| | २१ | संहिता | संहिता |
| २८ | ३२ | चतुष्या | चतुष्पा |
| २९ | ६ | वृहती | वृहतो |
| | १५ | ग्रहणं | ग्रहणं |
| ४१ | ६ | संसर्ग | संसर्गं |

| पृ० | प० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| ४१ | १३ | आसङ्का | आसङ्क |
| | १६ | असंसर्गं | असंसर्गा |
| | १६ | ग्रहाण | ग्रहणि |
| ४२ | १५ | उद्बद्ध | उद्बद्ध |
| | १५ | मस्ति् | मस्ति |
| | २६ | यत्रन | यत्रैत |
| ४३ | २६ | रस ऽक्षरो | रसोऽक्षरो |
| ४४ | ५ | अथाक्षर | अथ क्षरे |
| ४५ | २७ | गाया | माया |
| ४७ | २६ | वन्धश्च | वन्धश्च |
| ४८ | १८ | प्यमारो | प्यभावो |
| | २१ | युद्दे | युद्धके |
| ४९ | ६ | मायामि | मालामि |
| | २० | ग्रयाति | ५ महंति |
| | २१ | ५ उन्मी | उन्मी |

## मत्यर्यकमत्योपनिपदि ।

| पृ० | प० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| ५१ | २४ | मोतर्व्य | मोतव्यं |
| | २८ | मयभ्वराम | मयेश्वरं च |
| ५३ | ११ | मृयो | मृयौ |
| | १७ | मृययो | मृत्ययो |
| | १३ | यथालय | यथोर्म्मैव |
| | १४ | ऽमृत | ऽमृतं |
| ५४ | २१ | आहं हि सत्य | मानं हि सत्यं |

## पुरुषैकमत्योपनिपदि ।

| पृ० | प० | अशुद्ध पाठ | शुद्ध पाठ |
|---|---|---|---|
| ५६ | ५ | त्रिधा या | त्रिधा वा |
| ५७ | ३१ | हय | हयं |
| | ३१ | तदृष | तद्देव· |
| ५८ | २१ | मथा मायर्ने | यथा मायते |
| | २१ | मोऽर्थो | मोऽर्थो |
| | ३१ | मनत | मनूतं |
| ५९ | ६ | घोपयथ्ने | घोपयथते |

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ६० | १७ | प्रभदोत् | प्रभेदात् |
| | २१ | ताणुसृष्टिः | ताण्डसृष्टिः |
| | २२ | क्षुद्रात्तु | क्षुद्रा तु |
| ६१ | २१ | यथा व | यथा या |
| | २१ | श्वरोऽपि | श्वरेऽपि |
| | २२ | कठ श्रुतिः | कठश्रुतिः |
| ६२ | ७६ | श्लोकाग्रे—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्चयत् इत्यधिकः पठनीयः। | |
| ६३ | ११ | ब्रह्मा कर्म्म च कर्म्माणि | ब्रह्मा कर्म्म च कर्मणि |
| ६४ | १ | तापस्य | तापसस्य |
| | २ | सुपर्णः समुद्र | सुपर्णं स समुद्र |
| | ४ | दिलस | दिल से |
| ६५ | ३—४ तृतीय चतुर्थ पङ्क्त्यो र्मध्ये श्रुतिः-अर्थक्रिया यद्वः ( शीर्षकम् ) | | |
| | २१ | दात्मन्वि नो | दात्मन्विनो |
| ६६ | १ | विलस | विलंस |
| | ७ | दोर्ण्यं | दौर्ण्यं |
| | १५ | कान्नो पादा | कान्नोपादा |
| ६७ | ८ | भूताप | भूतोप |
| | १७ | प्रसित | प्रसति |
| | २० | प्राणे | प्राणो |
| | २५ | परान्चकश्चित् | परांश्च कांश्चित् |
| ६८ | ५ | न्दु प्रयान् गवाश्वा | न्दुप्रायान् गवाश्वा |
| | १५ | संभाविता | संभाविताः |
| | १५ | इक्षा | इक्षाः |

## संशयाधिकारे संदिग्धसर्वोपनिषदि।

| पृ० | प० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ७० | ८ | वाचं | वाच्यं |
| ७१ | ५ | कउ वृक्ष | कउ स वृक्ष |
| | ६ | तद्ध्यति | तद् यद्ध्यति |
| | ८ | जो दुनियां | जो दुनियां पर कब्जा कर खड़ाता है |
| | १० | अर्वाग्र | अर्वाग् |
| | १७ | दीर्घतया | दीर्घतमा |
| | १८ | मात्मान | मात्मन |
| | १९ | मस्य | मस्थ |

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ. |
|---|---|---|---|
| ४१ | १३ | आसङ्गाः | आसङ्गः |
| | १६ | असंसर्गः | असंसर्गा. |
| | १६ | ब्रह्माण | ब्रह्मणि |
| ४२ | १५ | उद्वद्ध | उद्बद्ध |
| | १५ | मस्ति् | मस्ति |
| | २६ | यत्रत | यत्रैत |
| ४३ | २६ | रस.ऽक्षरो | रसोऽक्षरो |
| ४४ | ५ | अथाक्षरे | अथ क्षरे |
| ४६ | २७ | माया | मायाः |
| ४७ | २६ | वन्धश्च | वन्धश्च |
| ४८ | १२ | प्यमाजो | प्यमावो |
| | २१ | युङ्क्ते | युङ्क्ते |
| ४९ | ६ | मायामि | मालामि |
| | २८ | महति | ५ महति |
| | २१ | ५ उन्मी | उन्मी |

## प्रत्ययैकसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ. |
|---|---|---|---|
| ५१ | २४ | प्रोतर्क्ये | प्रोत्तर्क्ये |
| | २८ | मयाश्वरश्च | मयेश्वरं च |
| ५३ | ११ | मृत्यो | मृत्यौ |
| | १२ | मृत्ययो | मृत्यवो |
| | १३ | यथोन्नयः | यथोर्म्मय |
| | १४ | ऽमृत | ऽमृतं |
| ५४ | २१ | अहं हि सत्यं | भानं हि सत्यं |

## पुरुषैकसत्योपनिषदि ।

| पृ० | पं० | अशुद्ध पाठ | शुद्ध पाठ. |
|---|---|---|---|
| ५६ | ५ | त्रिधा या | त्रिधा या |
| ५७ | ३१ | दृष्ट | दृष्टं |
| | ३१ | तदेक· | तदेकः |
| ५८ | २१ | तथा मायतें | यथा मायते |
| | २५ | सोऽप्यो | सोऽर्प्यो |
| | ३१ | मनतं | मनुतं |
| ५९ | १ | चोपपद्यते | चोपपद्यते |

| पृ० | पं० | अशुद्ध पाठाः | शुद्ध पाठाः |
|---|---|---|---|
| ६० | १७ | प्रभदोत् | प्रभेदात् |
| | २१ | ताणुस्तुष्टिः | ताण्डस्तुष्टिः |
| | २२ | क्षुद्रात्तु | क्षुद्रा तु |
| ६१ | २१ | यथा व | यथा वा |
| | २१ | श्वरोऽपि | श्वरेऽपि |
| | २२ | कठ श्रतिः | कठश्रुतिः |
| ६२ | ७६ | श्लोकादग्रे—अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्य-मगन्धवच्चयत् इत्यधिकः पठनीयः। | |
| ६३ | ११ | ब्रह्मा कर्म्म च कर्म्माणि | ब्रह्मा कर्म्म च कर्म्मणि |
| ६४ | १ | तापस्प | तापसस्य |
| | २ | सुपर्णः समुद्र | सुपर्णः स समुद्र |
| | ४ | दिलस | दिल से |
| ६५ | ३—४ तृतीय चतुर्थ पङ्क्त्योर्मध्ये त्रुटिः-अर्थक्रिया पक्षः ( शीर्षकम् ) | | |
| | २१ | दात्मन्वि नो | दात्मन्विनो |
| ६६६ | १ | विस्नस | विस्रंस |
| | ७ | दोष्ण्यं | दौष्ण्यं |
| | १५ | कान्तो पादा | कान्तोपादा |
| ६७ | ८ | भूताप | भूतोप |
| | १७ | प्रसित | प्रसति |
| | २० | प्राणे | प्राणो |
| | २५ | पराञ्चकश्चित् | पराञ्च कश्चित् |
| ६८ | ५ | न्दिु प्रयान् गवाश्वा | न्दुप्रायान् गवाश्वा |
| | १५ | संभाविता | संभाविताः |
| | १५ | इक्षा | इक्षाः |

## संशयाधिकारे संदिग्धसर्वोपनिपदि।

| | | | |
|---|---|---|---|
| ७० | ८ | वाचं | वाच्यं |
| ७१ | ५ | कउ वृक्ष | कउ स वृक्ष |
| | ६ | तदध्यति | तद् यद्ध्यति |
| | ८ | जो दुनियां | जो दुनियां पर कब्जा कर रक्खा है |
| | १० | अर्वाग्र | अर्वाग |
| | १७ | दीर्घतया | दीर्घतमा |
| | १८ | मात्मान | मात्मन |
| | १९ | | |

